# वारुणोपपुराणम्

श्री गणेशाय नमः

प्रथमोऽध्यायः

यस्मिन् नाम च रूपं च कल्पितं परमार्थतः
अविक्रियं सर्वगं यत्तद्ब्रह्मपरमं भजे १
पुरा सरस्वतीतीरे शौनकाद्या महर्षयः
सत्रावसाने सर्वेऽपि हविषा वारुणेन च २
प्रीणयित्वा च वरुणं स्नात्वा नद्यां कृतोदकाः
भस्मत्रिपुंड्रनिटिला रुद्राक्षा भरणोज्ज्वलाः ३
पञ्चाक्षरजपासक्ताः कृतलिङ्गार्चनास्सदा
भक्त्या परमया देवं प्रचेतसमथाब्रुवन् ४

ऋषयः

प्रचेतसमहाभाग नदीनदपतेः पते
प्रसादयामस्त्वां सर्वे प्रसन्नः प्रश्नधारणे ५
वद निस्संशयं ज्ञानं येन पश्याम तत्पदम्
तदेव वरुणः पाशी ध्यात्वा देवं पिनाकिनम् ६
नमस्कृत्वा प्रमेयाय बभाषे ऋषिसंसदि

वरुण उवाच

नमो व्ययाय नित्याय व्यापिने सर्वमुक्तये
अनाधाराय सर्वेषामाधाराय शिवाय च ७
सृष्टिस्थित्यन्तकर्तॄणां साक्षिणे प्रभवे नमः
वक्ष्यामि परमं गुह्यं शौनकाद्या महर्षयः ८
हिरण्यगर्भाद्वेदानां प्राप्तिर्व्यासस्य कीर्तिता
सोऽपि प्रजापतिर्धाता लब्ध्वा वेदान्महेश्वरात् ९
प्रवर्तयामास विभुः प्राक्सृष्टिवदतन्द्रितः
सोऽपि व्यासो महा भागश्चतुर्धा प्रविभज्य च १०
ऋक्सामाथर्वयजुषां ऋषीनन्वग्रहीत्तदा

तदर्थब्राह्मणान्येव पुराणानि बभाण सः  ११
अन्यान्युपपुराणानि मुनयः प्रवदन्ति हि
आद्यं कुमारकथितं नृसिंहं नारदीयकम्  १२
वासिष्ठलैङ्ग्यं मारीचं नन्दाख्यं भार्गवं तथा
माहेश्वरं त्वौशनसमादित्यं च गणेशकम्  १३
काळियं कापिलं चैव दूर्वासं शिवधर्मकम्
पराशरेण कथितं साम्बं वारुणमेव च  १४
इदमष्टादशाख्यं यद्वारुणं मत्प्रभाषितम्
श्रृणुध्वं सावधानेन मुनयो वीतकल्मषाः  १५
मद्ज्ञानेनामृतप्राप्तः कथाख्यानादिब्राह्मणात्
विदुषां धार्यमेतच्च शिवज्ञानप्रधायकम्  १६
पशुपाशविमोक्षाय आत्मानं दकरं परम्
यन्नत्यममृतं धामयत्परात्परमैश्वरम्  १७
सत्यज्ञानानन्दरूपं नाम रूपादिवर्जितम्
भासमानं स्वयम्भासा नामरूपादि वस्तुषु  १८
सत्यत्वेनैव विज्ञातं यद्ज्ञातं ज्ञानमात्मनि
ममेति वस्तु संज्ञातं हर्षेणानन्दरूपिणम्  १९
प्राप्तमेवं विधगुणे क्षरे चाक्षरमैश्वरम्
क्षराक्षरविहीनं च साक्षिणं तमसः परम्  २०
ब्रह्मविष्णिवन्द्रतिर्यक्च कार्यभेदस्य कारणम्
यत्तद्देहेन्द्रियैस्तत्तद्भासकं चापि साक्षिणम्  २१
लोकदुःखैकसंस्पृष्टमनणुस्थूलमीश्वरम्
तदेवैतदनिर्देश्यं निर्देश्यं सम्बभूवहा  २२
त्रिलोचनमुदाराङ्गमुमया परया वृतम्
नीलकण्ठं महात्मानमप्राकृतशरीरिणम्  २३
व्ययं सर्वैरपि सुरैर्नरैरपि मुनीश्वराः

यत्तन्निर्मलचित्सत्यं ज्ञानानन्दाप्तिहेतवे २४
अप्राकृताया मूर्तेस्तु गुणाश्चाप्राकृताः स्मृताः
दैवकार्य प्रविष्टानां विष्ण्वादीनां गुणा इव २५
अप्राकृता एव लीला आध्यात्मज्ञानरूपकाः
विष्णवादीनां सुराणां च लीलास्ताः प्राकृताः स्मृताः २६
शम्भोर्विचित्रवीर्यस्य लीलाश्चाप्रकृताः स्मृताः
कश्चित्ताः कथयिष्यामि चित्तशुद्ध्यर्थमेव हि २७
ध्यायेदेवं महेशस्य लीलाश्चाध्यात्मदर्शिनीः
श्रुणवतां पठतां चापि आत्मा क्षिप्रं प्रसीदति २८
इति श्रीवारुणोपपुराणे प्रथमोऽध्यायः

## द्वितीयोऽध्यायः

मुनयः

अप्राकृताः कथं लीलास्ताः कथं ज्ञानदायकाः
लीलानां प्राकृतत्वं हि स्वधा वा देवकथ्यते १
एतं नस्संशयं चेन्धि यतो ज्ञानाधिको भवान्

वरुण उवाच

श्रुणुध्वं सावधानेन मनस्संयम्य वाग्यतम् २
परास्य शक्तिर्देवस्य विविधा
स्वभावादेव सा शक्तिर्महेशस्य पिनाकिनः ३
तस्याद्यन्तादि रूपाणि वैवं वेद मुनीश्वराः
तत्समो नाभ्यधिको नाप्यल्पस्त्वेक एव सः ४
भेदज्ञानेन मायैव मोहितौ विधिमाधवौ
अहमेव जगच्छ्रेष्ठो ह्यहमेवेति माधवः ५
अहङ्कारान्निर्गुणस्य नान्तमूर्ध्वं न चेक्षतुः
यल्लिङ्गं तल्लयं तस्य निगतस्सम्भवात्मकम् ६

निर्गुणं परमं साक्षात्तदेतत्प्रकृतेः परम्
तस्मात्तद्ब्रह्मणश्शम्भोर्मूर्तिर्लिङ्गं च कथ्यते ७
त्रिगुणां चोमया युक्तां त्रिणेत्रां लिङ्गनिर्गुणाम्
प्रथमेयं परालीला अहङ्कारविनाशिनी ८
द्वितीया कालनाशादिकालावच्छेदनाशिनी
तृतीया त्रिपुरारातेः पुरत्रयविनाशिनी ९
तानि त्रीणि पुराण्यासन् सत्वाद्यास्त्रिपुरा स्मृताः
अमणश्च स्वतन्त्रश्च स आत्मा देव ईश्वरः १०
तपोऽस्य यः पुराक्लृप्तः पार्थिवो विग्रहं स्मृतम्
सा ब्रह्मासारथिश्चास्य सबुद्धि परिकीर्तितम् ११
सुवेदास्तानि चाक्षाणि मनोरश्वः प्रकीर्तिताः
गुणत्रयपुरेष्वेषां यागतायान्तिको धनम् १२
गवाश्च ये परिकराश्शान्तिदान्त्यादयः स्मृताः
यमाश्च नियमाश्चैव योगाश्चित्तनिरुद्धकाः १३
यो मेरुस्स च ॐकारो यो विष्णुस्स शरात्मकः
गुणहीनं तु तल्लक्ष्यं दद्धत्वान्निर्गुणं हि तत् १४
या स्तुतिर्देवदेवस्य या वेदान्तार्थदायिनी
आद्यापरा सा सम्प्रोक्ता चतुर्थी दक्षनाशिनी १५
अहङ्कारात्मको दक्षः पत्नी या तस्य सुव्रता
प्रवृत्तिरितिविज्ञेया देवा ये तस्य भागिनः १६
कामक्रोधादयस्सर्वे यो मतानीश्वरात्मकः
कर्मणा नैव विज्ञानमिति लोके प्रदर्शितम् १७
यो निरासा महेशस्य दक्षिणाहङ्कृतात्मना
आत्मेत्यज्ञानहीनेन कृतमन्यावलम्बनम् १८
भेदज्ञानं हि तत्सर्वं यत्त्यागो हि सती तनोः
तद्ब्रह्मविद्या स्फुरणं नाशो हि परिकीर्तितः १९

यो नाशस्तन्महादुःखमहङ्कारावृतात्मनः
पुनश्शिवप्रसादेन यस्स्वर्गफलमीरितम्  २०
यो विनाशस्ततस्स्वर्गान्महाधिक्यप्रदर्शनात्
स कर्मणा च सा मुक्तिः प्राप्येति ज्ञातुमीरिता  २१
पञ्चमी देवदेवस्य लीला ब्रह्मललाटजा
ब्रह्मणः कारणं देवस्तस्माज्ञातो ललाटतः  २२
व्ययतस्त्वां तनुं तस्मै सृष्ट्वा तत्प्राविशज्ञगत्
प्रजेति ब्राह्मणादिष्टो जरामृत्युविवर्जितान्  २३
दृष्ट्वा तेन निरुद्धस्सन्साक्षत्वात् स्थाणुमीश्वरः
प्रसाक्षित्वं दर्शयितु स्थाणुर्ज्ञेयात्मदर्शिनाम्  २४
देवदारुवने स्थानात्कर्मनिग्राहकारिणाम्
देवदारुवनं प्राप्य तदज्ञानवनं स्मृतम्  २५
नेत्रत्या ऋषयो ये स्युः कामक्रोधादयो हिते
तेषां याः पत्नयः प्रोक्ता हसनास्ताश्शुभाश्शुभाः  २६
तेषां यन्निग्रहः प्रोक्तो मूढाः कर्मावलम्बिनाम्
इष्टा पूर्तादि धर्माणां श्रेष्ठभानस्य निग्रहः  २७
तेषु यद्बुद्धिदानं च साविद्याज्ञानदायिनी
शिवार्चनादि कथनं तद्ज्ञानप्राप्तं साधनम्  २८
दिगम्बरेण देहेन या देवं शम्भुना तदा
तदत्याश्रमिणां निष्ठा विज्ञापयितुमीश्वरः  २९
असङ्गादि निवृत्यादि वैराग्यं च प्रदर्शयत्
यो यं शम्भुस्स एवात्मयानुगास्त्री स्वरूपिणी  ३०
विष्णुस्सा महिमा माया तत्ससृष्टा स्वभावतः
ओश्शापो यत्पुरा दत्तस्तत्पापं परिकीर्तितम्  ३१
यत्प्राप्तं तदसंसृष्टमसङ्गत्वान्नसङ्गतम्
प्रवृत्तित्वाच्च चर्मादि कपाला हि गणादिभिः  ३२

स्वातिरिक्तं तया नैव इति तत्स्वीकृतं द्विजाः
सप्तमी देवदेवस्य लीला परिणीयात्मिका ३३
देवी ह्यात्मा सा च देवी ब्रह्मविद्येति कीर्तिता
हिमवान् यस्स बोधश्च स्कन्दोत्पत्तिस्तथाष्टमी ३४
लीला मन्मथ दाहादि ह्यात्मनः कामवर्जिनी
भाश्च दर्शयितुं देवश्चकार चघृणा निधिः ३५
नवमी दशमी प्रोक्ता चान्धकासुरघातिनी
योऽन्धकस्सहि चाज्ञानं यद्देव्या ग्रहणं करोत् ३६
यद्यत्सम्वित्प्रकाशस्य नाशमेवावगम्यताम्
अष्टस्त्रिशूलघातेन शङ्करेणामितौजसा ३७
स एवात्मात्म विज्ञानं वधश्चाज्ञाननाशनम्
यन्नृत्तं तत्परं शम्भोः परमानन्दरूपकम् ३८
तदेतद्ब्रह्मनिर्वाणमखण्डैकरसं हि तत्
तत्र नान्यत्तवैवान्यं न वाङ्मनसयोरपि ३९
तदेतन्नटनं प्रोक्तं विद्वद्भिः पारमेश्वरम्
श्रुत्या चोक्तया चानुभूय ब्रह्मविद्ब्रह्मगच्छति ४०
श्रवणात् पन्नादेतत् ज्ञानविज्ञानमाप्नुयात्
एताश्च प्राकृता लीला प्राकृता ज्ञानवर्जितः ४१
अप्राकृताय विज्ञेया ज्ञानविद्भिर्मनीश्वराः
श्रवणादस्य पापानि विनष्टानि न संशयः ४२
एकैकाध्यायमध्यस्थं चरितं श्रवणादपि
विनष्टपापो भवति शिवलोकमवाप्नुयात् ४३
इति श्रीवारुणोपपुराणे आख्यानकथनं द्वितीयोऽध्यायः

## वारुणोपपुराणे तृतीयोऽध्यायः

ऋषय ऊचुः

श्रुतान्नं क्षपतो लीलाश्शम्भोर्ज्ञानप्रदायकाः
निर्गुणं तत्कथं लिङ्गमुदभूच्छङ्करात्मकम् १

वरुण उवाच

निर्गुणत्वं स्वतस्सिद्धं तस्यैवामिततेजसः
औपाधिकमिदं विप्रा मूर्तिग्रहणमीशितुः २
निर्गुणत्वं ख्यापयितुं लिङ्गत्वं च प्रकाशितुम्
देवतास्सकला विप्रा मूर्तिरूपात्मकाः स्मृताः ३
निर्गुणं तु महेशस्य लिङ्गं सगुणमूर्तियुक्
लिङ्गार्चनं ख्यापयितुं मोहयामासतौ सुरौ ४
मोहितौ प्रळया देवौ वामपक्षाङ्गसम्भवौ
देवदेवस्य तौ सन्धौ विवादं जग्मतुः परम् ५
अहमेको जगद्धाता अहमेवेत्यधापरः
तयोः प्रबोधनार्थाय मध्ये लिङ्गा कृतिर्हरः ६
ज्वालामात्रा वृतस्तत्र तेजो राशि स्वयं प्रभः
उदभूद्विस्मितौ तौ च मोहितौ मा पतिर्विधिः ७
दृष्ट्वैतदैश्वरं तेजो ज्ञात्वा कारणमीश्वरम्
कारणादपि कार्याणामभेदेनैव संस्थितिम् ८
तदानीं तुष्टुवुर्वेगात्प्रजापतिजनार्दनौ

देवाः

नमो रुद्राय सोमाय शङ्कायामलमूर्तये ९
विशङ्काय वरेण्याय बभ्रुवे प्रभवे नमः
नमो भवाय शर्वाय लिङ्गाध्यध्यायशूलिने १०
उमासखाय दिव्याय हिरण्यपतये नमः
त्रिणेत्राय नमस्तेऽस्तु विश्वधाराय ते नमः ११
मृडाय नीलकण्ठाय ज्योतिषां पतये नमः
व्योमकेशाय देवाय नमस्ते कृत्तिवासने १२

गुहाध्यक्षाय गुह्याय गुहायां निहिताय च
वरदाय वरेरयाय ज्योतिर्लिङ्गाय ते नमः १३
इति स्तुवन्तौ ता देवौ जानुभ्यामवनीं गतौ
अदृष्ट्वान्तमथादिं च कोलरूपाराडजा कृती १४
जग्मतुर्विस्मृततरौ ज्ञात्वा देवेशमीश्वरम्
आगच्छाव इति प्रीतौ अहं भावैककारुणौ १५
अदृष्ट्वान्तं तथादिं च विषराणामूढचेतसौ
देवैस्सहागतौ तत्र अग्निमेत्य तदाब्रुवन् १६

देवाः

गच्छाग्ने लिङ्गरूपस्य देवदेवस्य वेधसः
किं तल्लिङ्गमनौपम्यं का शक्तिस्तस्य साम्प्रतम् १७
विचार्यवदभो वह्ने प्रत्यागच्छ द्रुतं हि नः
इति देववचः श्रुत्वा जवादग्निस्तदन्तिकम् १८
प्राप्य किं तेजसां राशिं दृष्ट्वा ते देवतात्रका
इत्युदीरितमात्रे तु वह्नौ खादभवच्च गीः १९
त्वय्यग्ने किं महद्वीर्य तद्वै दर्शय साम्प्रतम्
इत्युक्त्वात्रतृणं तत्र पातितं दग्धुमैक्षत २०
नशशाकमहायानाद्वह्निरप्यतिभीषणः
नमस्तेऽस्तु गमिष्यामीत्युक्त्वा देवानधाययौ २१
वायुमप्यतिवेगेन ज्ञातुं देवचिकीर्षितम्
प्रेषयामासुरमरास्सोप्यागच्छ द्विसर्जितः २२
मखवन्तं वज्रपाणीं प्रेषयामासुरीश्वरम्
द्रष्टुकामास्तथा देवास्तत्तेजस्तु तिरे दधौ २३
तदेतदमरास्सर्वे दृष्ट्वा मायामुमां शिवाम्
नत्वा च तुष्टुवुर्भक्त्या प्रसन्नेन्द्रियमानसाः २४

देवाः

नमस्ते वरदे देवी शङ्करार्धशरीरिणी
त्वयैवैतज्जगच्चित्रं भाति चाप्येति च स्थितिः २५
प्राप्यतेऽत्र महादेवी महामाया खिलात्मके
ततः प्रहस्य सा देवी प्रीता प्राहामरान्प्रति २६
एष एव जगद्धाता ज्योतिर्लिङ्गाकृतिर्हरः
एष नेतुरनादिश्च मोहितौ च सुरोत्तमौ २७
ब्रह्माविष्णुस्तथाग्निश्च वायुरिन्द्रादयस्सुराः
एतत्स्वरूपविज्ञानं भवतामतिदुर्लभम् २८
तस्माल्लिङ्गाकृतिं कृत्वा ज्योतीरूपस्य वेधसः
सम्पूजयत भावेन परमेण समाधिना २९
शिरोव्रतादिभिस्सम्यगग्निरित्यादिभिस्तदा
कृतपाशुपताचाराश्शतरुद्रीयजापिनः ३०
पञ्चाक्षरेण मन्त्रेण स तारेण सुरोत्तमाः
पूजयध्वं महादेवं भ्रमालस्य पराङ्मुखाः ३१
तारं यद्ब्रह्मणो रूपं निर्गुणं लिङ्गरूपिणम्
निर्गुणस्य महेशस्य लिङ्गं निर्गुणमुच्यते ३२
तस्मादभेदं लिङ्गं हि ब्रह्मणो मूर्तिकल्पने
इतरेषां तु भवतां सगुणामूर्तिरिव हि ३३
ममापि तत्र कल्प्याहा मूर्तिः प्रोक्ता मुनीश्वराः
तेनैवाभिन्नरूपेण तत्रैवाधिष्ठितास्सुराः ३४
तदेतत्कारणं मह्यमपि क्लृप्तं चराचरम्
तस्माल्लिङ्गार्चनं पुण्यं निर्गुणं ज्ञानकारणम् ३५
इत्युक्त्वा च तिरोधत्त सा देवी कमलेक्षणा
देवापि स्वं पदं प्राप्य लिङ्गार्चनमतन्द्रिताः ३६
भक्तिभावेन लिङ्गानि चक्रुः स्वाभिमतानि हि

पूजयन्ति सदा भक्त्या जनार्दनपुरोगमाः ३७
य इदं पुण्यमाख्यानं कथयिष्यति सूरिणा
शिवलोकमवाप्नोति शिवज्ञानं च विन्दति ३८
इत्युपपुराणे वारुणे लिङ्गार्चनकथनं नाम तृतीयोऽध्यायः

## वारुनोपपुराणे चतुर्थोऽध्यायः

वरुणः

स्वस्य कालानवच्छेदं प्रदर्शयितुमीश्वरः
कालकाल इति प्रख्यामगमच्छेदकारणात् १
तामप्याख्यायिकां पुण्यां प्रवक्ष्ये संग्रहेण वः
पुरा पाञ्चालदेशे तु शिखिध्वज इति श्रुतः २
सोमवंशभवो राजा क्षत्रियस्सत्यसङ्गरः
यज्वा दानपरो वीरो नानागुणसमाश्रयः ३
तस्य पञ्चालतनया नाम्ना भोगवती सती
बभूव वयसा विप्रा विष्णोः श्रीरिव लक्षणैः ४
तस्यां तस्य भवत्पुत्रो कातेन महता तदा
तस्य श्वेत इति प्रज्ञां पिता चक्रे महामतिः ५
कदाचित्क्रीडमानं तं बालचन्द्रमिवापरम्
प्रत्याजगाम ऋृषभो नृपतिं प्रतिसर्षभः ६
तनयस्तपनीयाभिस्तव राजर्षिसत्तम
ऊनषोडशवर्षेयं मृत्युं प्राप्नोति दारुणम् ७
ऋृषभस्य वचः श्रुत्वा नृपो धैर्यपरिच्युतः
ऋृषभं प्रार्थयामास साञ्जलिर्नृपतिस्तदा ८

नृप उवाच

क उपायोऽत्र भगवन् मत्सुतो मृत्युवर्जितः
कनकस्य प्रसादेन मृत्युहीनो भविष्यति ९

त्वया प्रसादनीयायं बालः पूर्वभवोऽस्य कः
किं कृतं पापमेतेन तन्मे विस्तरतो वद १०
ऋषभ उवाच
अयं बालप्रवरो मुनिः
न दृष्ट्वा तनयं तस्य पूजिता पृथिवी भुजा ११
वाक्यमुग्रतरं प्राह ऋषभो योगिनां वरः
पूर्वं भवे शूद्रपुत्रो वसत्कुले १२
कस्य चिद्ब्राह्मणसुतामगच्छत्कामपीडितः
तेन पापेन नष्टायुः कालधर्ममगच्छत १३
यमेन पीडितस्तीव्रैर्नरके यातनाशतैः
तस्मिन्नेव भवे राजन् किञ्चित्सुकृतमाप्तवान् १४
शिवालये ददर्शासौ योगिनं कञ्चिदुत्तमम्
तेनोक्तो बिल्वपत्राणि शिवपूजार्थमानय १५
तस्मै गृहीत्वा पत्राणि मालूरस्य ददौ तदा
तेन पुण्यप्रकर्षेण त्वत्सुतो यं महीपते १६
एतस्य मृत्युविजये शरण्यः परमेश्वरः
स चेच्छरण्यतां प्राप्तस्सद्यो मृत्युर्निवर्तते १७
सोपायान्तरमन्यैव विजये तस्य साम्प्रतम्
ततो भस्माभियन्त्र्याधश्वेतं योगी महामतिः १८
पञ्चाक्षरमधो दत्वा दत्वा रुद्राक्षमालिकाम्
कुरु लिङ्गार्चनं पुण्यं मृत्युस्तेऽभिमुखो भवेत् १९
इत्युक्त्वा तमनुज्ञाप्य योगी स्वैरगतिर्ययौ
आसप्तहायनो बालश्शिवलिङ्गार्चनेरतः २०
सम्प्राप्य तपसा स्थानं श्वेतकाननसञ्ज्ञिकम्
तत्राराध्यमहादेवपशुपाशनिवर्तकम् २१
तस्मिन्मृत्युदिने प्राप्ते श्वेतं सेतुं समागताः

क्रूरा दण्डधरा खड्गगदा पाशासि पाणयः २२
निवर्ताः स्वोद्यमात्तस्मात्किं ते बालविचेष्टितम्
नास्मान् विलोकतः कोऽपि न तिष्ठेत्क्षणमात्रकम् २३
इति ते भर्त्सयामासुर्नैव पूजा प्रभावतः
समाने तु मशक्तास्ते यमायाध शशन्निरे २४
तदा भटानां वचनं श्रुत्वा संयमिनीपतिः
क्रुद्धो महिषमारुह्य दण्डपाशकरो भटैः २५
मृत्युज्वरक्षयाद्यैस्तु समागच्छत्तदन्तिकः
ध्यानमात्रपरं शान्तं दृष्ट्वा श्वेतं नृपात्मजम् २६
बबन्ध कालपाशेन घोरेणातिनदन् रवम्
दृष्ट्वास्य गात्रं याम्येन पाशेन परितो वृतम् २७
तुष्टाव वाग्भिरिष्टाभिश्वेतो भेति विसङ्कुलः

श्वेत उवाच

विश्वबन्धो महादेव उग्र भीम मनोन्मन २८
त्रिशूलपाणे शरणं त्वां प्रपन्नोऽस्मि रक्ष माम्
शम्भो शङ्कर विश्वेश वृषभाधीशवाहन २९
उमापते पशुपते स्कन्दनन्देशसेवित
प्रपन्नं पाहि मां शम्भो नीलकण्ठ हराव्यय ३०
इति तां गिरमाकर्ण्य देवो लिङ्गात्समुत्थितः
श्रुण्वतां सर्वदेवानां यमस्य च महेश्वरः ३१
उवाच श्वेतमाभैषीरिति शूलेन तं पृथक्
पा दनो रसिसन्ताड्य गतासु मकरोच्छिवः ३२
तदानीमभवद्वृष्टिः पुष्पमालासमाकुला
देवदुन्दुभिनिर्घोषैः पूरितं भुवनत्रयम्
देवा जयजयेत्यूचुर्मृत्युमुज्जीवयद्धरः ३३
श्वेताय नाम साहस्रमायुर्दत्वातिरो दधे

इदं यः पुरायमाख्यानं श्वेतकालनिबर्हणम् ३४
श्रृणुयाच्छ्रद्धया युक्तो ह्यपमृत्युविवर्जितः
दीर्घायुष्यं च भोगांश्च लभते नात्र संशयः ३५
इति वारुणोपपुराणे कालहरणं नाम चतुर्थोऽध्यायः

पञ्चमोऽध्यायः

श्रुतं दिव्यमुपाख्यानं कालसंहराह्वयम्
केन कस्मिन्प्रकारेण हतास्ते त्रिपुरादयः १
तद्वदस्वविशेषेण लीला शम्भोर्महात्मनः

वरुण उवाच

श्रृणुध्वं मुनयस्सर्वे त्रिपुराख्यानमुत्तमम् २
ब्रह्मणो वरदानेन ते त्रयोऽघतरोऽभवन्
ताराक्षो मकराक्षश्च विद्युन्माली च सत्तमा ३
तेषां त्रीणि पुराण्यासन् अयः काञ्चनराजतः
अन्तरिक्षे चराघोरा लोकोपद्रवकारिणः ४
देवास्ते पीडितास्तैस्तु शङ्करं शरणं गताः
त्यक्त्वा स्थानानि विष्णवाद्याधात्रुशक्रपुरोगमाः ५
गत्वा कैलासरसिकं तुष्टुवुः परमेश्वरम्
नमस्तेऽस्तु गुहेशाय शङ्करायार्तिहारिणे ६
प्रपन्नाय प्रसन्नाय गुहाप्रीताय वै नमः
उग्राय भयरूपाय सह मानाय धन्विने ७
हिरण्यबाहवे तुभ्यं पशूनां पतये नमः
शूलिने मूर्तिहीनाय पुण्यरूपाय ते नमः ८
लिङ्गरूपाय शान्ताय नमस्ते कल्मलीकिने
सुवासनाय घोराय सद्योजाताय ते नमः ९
वामदेवादिदिव्याय ईशानाय कपर्दिने

नीलग्रीवाय भव्याय मेध्याय च नमो नमः १०
इति स्तुत्वा महादेवं स्तुत्वा तु परमेश्वरम्
दृष्ट्वा नत्वा महादेवं उक्त्वा त्रिपुरचेष्टितम् ११
तेनाभयप्रदानेन प्रीतोऽस्मि विबुधोत्तमाः
कल्पयित्वास्य सन्नाहं रथं भूमिं च वाहनम् १२
वेदानश्वमयान् तस्मै धनुः स्वर्णगिरिं तथा
ज्यां च शेषं महानागं पुष्पवन्ता रथाङ्गके १३
बाणं हरिस्तथा सूतो धातारं यायिनस्सुरा
एवं सन्नह्यतं देवं पुनस्सञ्चिन्त्य यत्नतः १४
नाशाय त्रिपुराणां च समारुह्यायौ हरः
एवं वर्षसहस्राणि पश्यतस्तस्य संयुगम् १५
कदाचित्त्रीणि तान्येव पुराणि पृथितौजसाम्
एकदृष्ट्वा देवेशस्तत्र लक्ष्य शरं व्यधात् १६
तस्मिन् क्षणे विनिर्दग्धं देवानामपि पश्यताम्
तदा जय जयेत्युक्ता सिद्धैराकाशसंस्थितैः १७
वाता ववुस्तदा शीता सूर्योऽप्युदित एव हि
ॠषयस्तुष्टुवुर्देवं प्रभूतवचसा हरम् १८
देवास्साञ्जलयस्सर्वे प्रणम्य परमेश्वरम्
वाग्भिर्हृष्टाभिरग्र्याभिरूचुर्जयजयेति च १९
तुष्टुवुश्च पुनस्स्तोत्रैर्विष्णुब्रह्मादयस्तदा

देवा ऊचुः

जयामेय गुणातीत जय धीर परात्पर २०
जय विश्वविधानादि सर्गस्थित्यन्तकारण
जयातिक्रूर शत्रुघ्नत्रिपुरासुरसंहर २१
जय कालकलातीत जय त्र्यम्बकशङ्कर
जय विश्वाधिकाशास्य विनायकगुरो हर २२

जय प्रमपमन्दार कृतकादि गुणास्पद
जय शम्भो सुराधीश जय धर्मद शर्मद २३
इति संस्तुवतां तेषां प्रसन्नश्चाम्बिकापतिः
बभाषे तान्सुरश्रेष्ठाः कथ्यतां यद्धृदि स्थितम् २४
सन्तुष्टोवस्सुरास्सर्वं परं यच्छामि साम्प्रतम्
इति देववचः श्रुत्वा देवाः प्राञ्जलयस्तदा २५

देवाः

नमस्ते देवभगवन् नमस्ते रुद्रमन्यवे
बाहुभ्यामुत ते शम्भो त्रिपुरघ्न नमो नमः २६
प्रसादयामो भगवन् त्वांश्चैवोपसदा वयम्
पशूनां त्वं पतिर्देवः पाह्यस्मान् पशुभावतः २७
पतिस्त्वमसि सर्वेषां देवानामनिशर
तथेति तान्प्रतिष्ठाप्य पशुभावे सुरोत्तमान् २८
अनुगृह्याथ भगवान् तत्र देव्या तिरो दधे
देवाश्चेन्द्रादयस्सर्वे स्वं स्वं स्थानं ययुर्मुदा २९
तथैव विष्णुना ब्रह्मायानमारुह्य गच्छताम्
य इदं पुण्यमाख्यानं त्रिपुरघ्नस्य शूलिनः ३०
शृणुयाद्यः पठेद्वापि ब्राह्मणैस्सह सुव्रताः
स शत्रुविजया लब्ध्वा भुक्त्वा भोगान्महामनाः ३१
दिव्येन पुण्यमानेन शिवलोकमवाप्नुयात्
इदमेव पुरा श्रुत्वा इन्द्रो वृत्रं महौजसम् ३२
जज्ञे कुमारस्तारादीन् देवी भण्डासुरादिकान्
तस्मात्पुण्यतमं श्रुत्वा विजयाय नृपोत्तम ३३

इत्युपपुराणे वारुणे त्रिपुरजयो नाम पञ्चमोऽध्यायः

# वारुणोपपुराणे षष्ठोऽध्यायः

वरुणः

पुरा प्रजापतिः पुत्रो दक्षो नाम मुनीश्वराः
इयाज हयमेधेन गङ्गासागरसङ्गमे १
विना विश्वेश्वरं देवं देवानन्यानपि कृथा
तस्यैवं यजतस्तत्र प्रादुर्भूतासु ता सती २
गणैश्च कोटिशो देवी सखीभिश्च समन्ततः
समागत्याब्रवीद्दक्षं पितरं परमेश्वरी ३

श्रीसत्युवाच

किमर्थं मामनाहूय समारब्धो महाक्रतुः
भगवानपि विश्वात्मा न दृष्टो देवसंसदि ४
स एव क्रतुराजो हि किं न पूज्यो महामखे
तदा सतीगिरं श्रुत्वा नैष पूज्यो महेश्वरः ५
तत्सतीं त्वां विना दद्मि हविर्देवेषु कल्पितम्
इति सा दक्षमाहूय नष्टस्ते क्रतुरन्त्य हि ६
त्वया जातमिदं देहं योगेनाहं समुत्सृजे
इति योगेन सा त्यक्त्वा स्वकळेबरमीश्वरी ७
पुनः स्यैनैव दिव्येन शरीरेण हरं ययौ
तस्य दक्षस्य गर्वस्य शातनाय महौजसम् ८
वीरभद्रं समाहूय ध्वंसयाद्य महाक्रतुम्
नत्वा च गणपो देवं वीरभद्रो गणैस्सह ९
गत्वा विध्वंसयच्छालां पत्नीनां स गणाधिपः
देवानपि च जग्राह ताडयन् गदया तदा १०
मृगरूपेण दावं तं यज्ञं चिच्छेद मस्तके
दक्षं चिच्छेद खड्गेन पूष्णो दन्तानभञ्जयत् ११
विष्णुं विपोथयामास इन्द्रादीन् पादघाततः

ऋत्विजां पाटयामास शरीराणि महामनाः  १२
पुनश्चान्यानपि सुरान् कां दिशी कानधाकरोत्
गत्वा शशंस देवाय कृपाळुर्भगवान् हरः  १३
मेषा स्वेन युयो जायं दक्षमक्लिष्टकारिणम्
पुनस्ति न स्तुता देवो गिरिजापतिरीश्वरः  १४
वाजिमेधसहस्रस्य सुकृतं चापि दत्तवान्
ततोऽस्य दक्षो देवेशं स्वस्य पापापनुत्तये  १५
त्र्यम्बकेश्वरगिरौ पूजयामास भक्तितः
इत्येतद्दक्षचरितं पूर्वदृष्टं मया तदा  १६
तस्मान्मखाधिपं शर्वमपूज्य प्राप्तवान् दशाम्
य इदं शृणुयाद्भक्त्या पठते ब्राह्मणैस्सह  १७
सोऽप्यश्वमेधयज्ञस्य फलं प्राप्य शिवं व्रजेत्  १८
इति वारुणोपपुराणे दक्षचरिते षष्ठोऽध्यायः

## सप्तमोऽध्यायः

वरुणः

सिसृक्षतोर्भगवतोर्ब्रह्मणः पद्मजन्मः
नास्फुरत्सृष्टिरीशस्य दध्यावज्ञाननाशनम्  १
महादेवं महात्मानं स्वस्य विष्णोश्च कारणम्
ध्यायतस्तस्य देवस्य प्रादुर्भूतस्तदा हरः  २
ललाटतटमुद्भिद्य ब्रह्मणस्सह शङ्करः
तुष्टाव देवं हृष्टात्मा ब्रह्मवाग्भिर्महेश्वरम्  ३

ब्रह्म उवाच

देवदेव जगन्नाथ करुणाकर शङ्कर
हर सर्वामरेशान प्रसीद परमेश्वर  ४
विश्वम्भर व्योमकेशधूर्जटे नीललोहितः

कपालपाणे विश्वात्मन् कृत्तिवासदिगम्बर ५
सिसृक्षाम विना स्त्यै न सृजत्वं परमेश्वर
यत्सृष्ट्या न कलं देव जगत्ते पूरयिष्यति ६
ओमित्याह हरप्रीतस्ससृजे परमेश्वरः
रुद्रानमितविश्रान्तान् त्रिणेत्रान् सोमशेखरान् ७
अन्तरिक्ष्यान् भूचरांश्च तथा दिवि चरानपि
दृष्ट्वा रुद्रानपि तदा प्रजापतिरभाषत ८

ब्रह्म

नमस्तेऽस्तु महादेव सोम सोमार्थशेखर
सृजत्वमशुभा देव प्रजामृत्युसमन्विताः ९
नो चेत्सर्गो विवर्धश्च न भविष्यति साम्प्रतम्
तस्य प्रजापतेर्वाक्यान्नाहं सृक्ष्ये मृतिप्रजाः १०
तस्मात्स्थाणुर्भवाद्यत्वमेव सृजभोः प्रजाः
तदादाय महेशस्य ससृजे भगवान्प्रजाः ११
तदानीं देवदेवोनौ रुद्रस्थाणुरिति श्रुतः
एकादशास्ते मुख्याश्च सञ्जाताश्शङ्करांशकाः १२
भवो रुद्रः पशुपतिश्शिपिविष्टो महेश्वरः
उग्रो भीमो बभ्रुकश्च ईशानः पिङ्गळो हरः १३
एकादशानां रुद्राणामुत्पत्तिः कथिता हि वः
श्रवणादस्य पापानि ज्ञानपूर्वकृता न हि १४
प्रणाशं यान्ति न हसा रुद्रलोकं च विन्दति १५

इति वारुणोपपुराणे रुद्रसृष्टिर्नाम सप्तमोऽध्यायः

## अष्टमोऽध्यायः

वरुणः

पुरा दारुवने देवो देव्या चैव ययौ तदा

विहरंश्च नदन्गायन्नग्नडन्मत्तरूपधृक् १
तस्य देवस्य तद्भावमज्ञात्वा हि दिवौकसः
पश्यन्ति च मुनीन्द्राश्च तत्पत्न्यश्चापि शोभनाः २
ऋृषयः
को यमा याति नोन्मदिग्वासा निर्घृणोऽपि सन्
के यमस्यानुगा बाला बाललीला विनोदिनी ३
इमावहङ्कारयुतौ परीक्ष्या दानवोत्तमौ
भिक्षेति तौ च भाषं तौ स्त्रियो नो दातुमर्हथ ४
ता स्त्रियः कामसन्तप्ता भिक्षा व्याजेन शङ्करम्
समालिङ्ग्य चुचुम्बुश्च तदीय्याननपङ्कजम् ५
दृष्ट्वा ते मुनयः क्रुद्धाश्शेवुश्शङ्करमव्ययम्
व्याघ्रानागादयश्चैव वह्निमप्यतिभीषणम् ६
दधार लीलया देवः पुनर्गायन्तदग्रतः
सञ्चचार तदा देवीं समालिङ्ग्य तदा हरः ७
पुनः क्रुद्धा महात्मानश्शेप्रस्ते लिङ्गमध्य हि
पतितं भूतले दंष्ट्रकष्टं लोकेषु कुत्सितम् ८
यत्सञ्चरति पत्न्या च निर्घृणः कामपीडितः
तथेति पातयित्वा तु इदं वः पूज्यमस्तु च ९
नो चेत्समस्त कर्माणि निष्फलानि भवन्तु वः
लिङ्गार्चनविहीनस्य हव्यकव्यमथापि वा १०
हव्यं हव्याशिनश्चापि कव्यं कव्याशिनस्तथा
नैव गृह्णन्ति ऋृषयः श्वमांसमिव भोजने ११
इत्युक्त्वान्तर्धिमापायं देव्या देवस्त्रिशूलधृक्
तल्लिङ्गवृद्ध्या तत्र त्या ऋृषयस्ता वसा मुदाः १२
ब्रह्माणं शरणं प्रापुस्सत्यलोकनिवासिनम्
गत्वा शशंसिरे देवमृषयः खं न मानसाः १३

ऋषयः

कश्चित्समा ययौ नग्नो चालया तुलया वनम्
मोहयित्वा स्त्रियो बालान् भिक्षा व्याजेन सञ्चरन् १४
प्रनष्टं नः कुलं सर्वं तपसश्च च्युतावयम्
प्रजापति ऋषि वचः श्रुत्वा वाक्यमुवाच हा १५

प्रजापतिरुवाच

भवद्भिरधुना देवो दृष्टोऽपि दुरदृष्टतः
अज्ञानात्तपसां मुक्तिमपि ज्ञायैव वञ्चिताः १६
यद्दर्शनात्तपोराशिः कुलं च सुकुलं भवेत्
मूढाः कर्मपरा यूयमज्ञानभ्रान्तचेतसः १७
लिङ्गं यत्पतितं तस्य देवदेवस्य शूलिनः
पूजयध्वं प्रसन्नेन मनसा परमेश्वरम् १८
अतीत्य घोरदुर्गाणि संसाराणि तपांसि च
इति धातृवचः श्रुत्वा कृत्वा लिङ्गानि शूलिनः १९
कृत्वा पाशुपतीं दीक्षां धृत्वा चैव त्रिपुण्ड्रकम्
रुद्राक्षमाला भरणाः पञ्चाक्षरजपादराः २०
शतरुद्रीय मन्त्राणि जपन्तो विमलाशयाः
न कृतुर्देवदेवस्य लिङ्गस्याग्रे महेशितुः २१
तुष्टुवुर्विविशास्सर्वे देवदारुवकाकसः

ऋषयः

हरशङ्करभर्गभूतपः स्मर हरसर्वगसर्वकारण
मृडगङ्गाधरभूतभव्यशम्भो पवमानाख्यधर्मदायक २२
दुरितानि समाहितानि यानि नः प्रशमं यान्तु तवैव सत्क-
रक्षात्
भव दुःखनिवारकोऽसि नः सततं कर्मफलप्रदायकः २३
अमरैरखिलैश्च सेव्यपादस्सततं रक्ष महेश देवदेव

पितरं हि जनेषु बालकाद्याः परिनिन्दन्ति पितैव रक्ष ते तान्
२४
वयमेव जडाः कृतागसः परिपाल्यास्सुतवत्पितासि देव
बालका नाम बाल्येन परिभूता विमोहिताः
सह मानः पितासि त्वं त्वमेव गतिरद्य नः २५
इति वाक्यान् मुनीन् प्राह प्रादुर्भूतः स्वयं हरः

ईश्वरः

क्षान्ता पराधास्सर्वेऽपि कृतलिङ्गार्चना हि वः २६
अद्यापि किं ममास्त्येव लिङ्गार्चकजने मले २७
दत्वा तदैश्वरं ज्ञानमनुशास्य तिरो दधे
देवदारुप्रवृत्तानां मुनीनामिदमुत्तमम् २८
आख्यानं च नरः श्रुत्वा सर्वपापैः प्रमुच्यते २९
इति वारुणोपपुराणे देवदारुवनप्रवेशो नाम अष्टमोऽध्यायः

## नवमोऽध्यायः

वरुणः

यदा काळीति सा देवी चोक्तमात्रेण शम्भुना
योगेन महता क्रुद्धा त्यक्त्वा तनुमियेष सा १
तदा हिमवतः पत्न्या मेनाया गर्भमास्थिता
तत्र सा ववृधे गर्भे क्षयवृद्धिविवर्जिता २
स रुद्रो भगवान् भर्गः पत्न्या विरहकातरः
त्यक्त्वा तदङ्गशिखरे विन्ध्यस्य च महौजसः ३
विनिर्मायालयं तस्या रक्तवद्विश्वकर्मणा
सैव विन्ध्याद्रिनिलया देवी भगवती शिवा ४
पूजिता नाशयेद्गर्भमरिष्टानि शुभप्रदा
योगमास्थाय परमं दग्धा वात्मानमात्मना ५

एवं तस्य स्थिते देवा अभवन् दुःखिताशयाः
पीडितास्तारकेणैव इन्द्राद्या ब्रह्मणा हरिम् ६
प्रजापतेन सहितास्सम्मन्त्र्य स्मरचेष्टितम्
वसन्तरत्या सहितं प्रययौ तद्वनं द्विजाः ७
तस्यावेशवशात्सर्वं मुदितं वनमाबभौ
सोऽयं बिभेद कामोऽसौ न च चालयितुं हरम् ८
सर्वमात्मात्मना शम्भुः स्मर तच्चेष्टितं तथा
विज्ञाय दृष्ट्या क्रोधेन तं निन्ये भस्मसाद्धृदः ९
ततस्ते तुष्टुवुर्देवं रत्या साकं दिवौकसः १०

देवाः ऊचुः

देव शङ्कर सर्वज्ञ सोम विश्वाधिकामल
सर्गस्थिति विधानादि विश्वरक्षा परायण ११
समस्ति भगवन् शम्भो नमस्ते ते नमो नमः
बाहुभ्यां शम्भुदाभ्यां ते दुर्वीर्याभ्यां नमो नमः १२
विश्वम्भर महादेव कृपाकर नमो नमः
तदामरान् वचः प्राह रत्यायं पतिरेव हि १३
अनङ्गो भवतामद्य यदग्रे तद्विधीयताम्
जानामि पीडितान् देवान् तारकेण बलीयसा १४
ब्रह्मणा विष्णुना सर्वे गत्वा हिमवतस्सुताम्
मानयध्वं विधानेन ततो भवत विज्वराः १५
ततः प्रणम्य ते सर्वे गत्वा हिमवतस्सुताम्
बोधयामासुरमराः कल्याणाय महात्मनः १६
तथैव मुदितास्सर्वे हिमवं तेन पूजिताः
अदैत्यदेवं संरम्भैर्मङ्गळैर्दुन्दुभिस्वनैः १७
महता तु गजेनैव गणपैश्च परिवृतः
छत्रैश्च चामरैर्दिव्यैर्व्यजिनैरतिशोभितैः १८

विष्णुब्रह्मादयस्सर्वे देवाश्च ऋषिभिस्सह
जग्मुः प्रसाद्य देवेशं स्तुवन्तः परमेश्वरम्  १९
गत्वा तैः पूजितो रम्ये विष्टरे परमेश्वरः
मुहूर्ते च शुभे देवीं मत्वा प्रीतेन सौहृदा  २०
तदानीमध यत्किञ्चित्कारयामास वै विधिः
दिशश्च मुदिताभ्यासन् तारकस्य च कम्पहा  २१
विधिनोढ्वा महादेवो गौरीं तां मनसा स्मरन्
स्मरा वेशितसर्वाङ्गो ययौ मन्दरकन्दरम्  २२
यः शृणोति परां लीलां देवदेवस्य वेधसः
भार्याकामो लभेद्भार्यां रुद्रलोकं च विन्दति  २३
इति वारुणोपपुराणे नवमोऽध्यायः

## दशमोऽध्यायः

वरुणः

अथ गत्वा महादेवो मन्दरं चारुकन्दरम्
नानाद्रुमलताकीर्णं पादपैश्चोपशोभितम्  १
मुनिभिर्यक्षगन्धर्वविद्याधरसुरासुरैः
गणपैश्च समायुक्तं शालां निर्मायचित्रिताम्  २
पर्यङ्कास्तरणास्तीर्यधूपैः पुष्पैश्च शोभिताम्
रेमे तया महादेव्या सत्यानन्दसुखाद्वयः  ३
तस्यैवं वर्तमानस्य देवाश्चात्यन्तपीडिताः
अग्निं प्रवेशयामासुश्शालायां तन्निरीक्षणे  ४
ततो गत्वाशुकाकारो वह्निस्तन्मिथुनं तथा
निमील्य शङ्कितश्चाभूत्स्मृत्वा स्मरदशां तथा  ५
तदैव गिरिजा ज्ञात्वा स वस्त्रा च तिरो दधे
तं च वह्निमधाहूय देवोऽदाद्रेतमास्यके  ६

तदाग्निस्तप्तहृदयो गङ्गामनुविगाह्य च
तस्यामपातयत्सापि स शरवणे ह्यदात् ७
ततस्सौम्यं प्रभा युक्तं कुमाराकृतिमाबभौ
षड्वक्त्रं चारुवदनं कटका गदभूषितम् ८
कुण्डलादि सुशोभाढ्यं प्रापुस्तं कृत्तिकाद्रुतम्
देवा ववर्षुः पुष्पाद्यैर्देवदुन्दुभिनिःस्वनैः ९
कळं जगुश्च गन्धर्वा ननृतुश्चाप्सरो गणाः
सर्वोऽपि मुदितो लोकः देवोऽपि गिरिजा युतः १०
वृषा सनस्थो वरदो देवदेवैरभिष्टुतः
समा ययौ स तं देशं दृष्ट्वा तं बालकं शुभम् ११
रम्यं रविशतप्रख्यं अबाधं मुदितायुतः
गिरिजा यास्ततो हस्ते तं ददौ चाम्बुजेक्षणम् १२
सापि देवी महाभागा प्रस्तुतस्तनमण्डला
अपाययत् स्तनं तस्मै सर्वविद्या रसात्मकम् १३
तदानीं तुष्टुवुस्सर्वे त्रिदशाः स्कन्दसंयुताः १४

देवाः

जय देवामरश्रेष्ठ सोमास्कन्द महेश्वर
जय सुन्दरसर्वाङ्ग जय त्रिदशनायक १५
जय प्रमथमन्दार विभो शाश्वतविश्वप
जय रुद्र महादेव जय त्र्यम्बक देवप १६
प्रसीद तारकादस्माद्भयं नाशय शङ्कर
तदानीं स्कन्दमीशोऽपि समनुग्राह्य तं शुभम् १७
दिव्यं च कवचं तस्मै तूणीबाणानथाक्षयान्
प्रादात्तस्मै महादेवश्शक्तिं च गिरिजा ददौ १८
इन्द्रोऽभिषिच्य देवानां सेनानीति व्यजिज्ञवत्
ददा शताङ्गमपि च सहस्राश्वैश्च शोभितम् १९

तदा प्रयाणाभिमुखौ देवसेनापती तदा
प्रययौ महता देवैर्योद्धुं तं तारकं प्रति २०
निर्भिद्य दुन्दुभिध्वानैर्हृदयं तस्य कम्पयन्
समरे च सुरैर्हत्वा तारकं सानुगं बलात् २१
तारकारिस्ततो देवैर्गत्वा सत्वा महेश्वरम्
तदानीं च युवत्याश्च पाणिग्राहमकल्पयत् २२
य इदं शृणुयान्नित्यं स्कन्दमाहात्म्यमुत्तमम्
स पुत्रपौत्रैश्श्रीमान् च भवते वीर्यवानपि २३
रुद्रसालोक्यमाप्नोति नात्र कार्याविचारणा २४
इति वारुणोपपुराणे दशमोऽध्यायः

## एकादशोऽध्यायः

वरुणः

शृणुध्वमन्धकरिपोश्चरितं भूरिपुण्यदम्
पुरा कश्चिदभून्नाम्ना अन्धकस्सुरसूदनः १
स कदाचिद्गिरिवरे दृष्ट्वा गिरिजयां शिवम्
विहरं तं यदृच्छैव करेणुमिभराडिव २
अधावदसि हस्तोऽसौ असुरैरपि तादृशैः
गत्वा च परितस्तेन नन्दिना पार्श्ववर्तिना ३
तं निर्जित्य तदा वेगाद्गृहीतुं गिरिजां ययौ
ततो हि हुं कृते दुष्टो रुद्रेणामित्रघातिना ४
ततो नियुद्धवेगेन निर्जित्यासिमपातयत्
हत्वा तं वेगितो रुद्रस्सोऽपि ज्ञात्वा च वैभवम् ५
जगतः कारणं देवं पितरं परमेश्वरम्
विश्वेश्वरं लसद्धाम तुष्टावाष्टशरीरिणम् ६

अन्धक उवाच
नमस्तेऽस्तु जगन्नाथ क्षमस्व परमेश्वर
मदीयमपराधं च अक्षमं क्षम्यतां विभो ७
मृत्युञ्जय महादेव शम्भो चन्द्रार्थशेखर
स्कन्दनन्दीशगणपसेविताङ्घ्रि सरोरुह ८
गङ्गाधर मृडानन्त शाश्वतामर सुप्रभ
त्रिणेत्र प्रमथाधीश पाहि मां परमेश्वर ९
इत्युक्त्वा प्रणिपत्याह क्षमस्वेति पुनः पुनः
तमुत्थाप्य पुनश्शम्भुस्समाश्वास्य च दुःखितम् १०
त्वया स्तुतोऽहं वरदो भवाम्यन्धकसूदनः
त्वदीयमपराधं च मया क्षान्तमनेकधा ११
तव दत्तं महाभागगाणापत्यं मयाधुना
तस्य सर्वात्मनो दत्तं गाणापत्यं मुनीश्वराः १२
करुणा वरुणा राशिः प्रसन्नपरमेश्वरः
सर्वज्ञश्चन्द्रशकलालङ्कारकलिताळकः १३
विहाय च ययौ शीघ्रमातर्दिं परमेश्वरः
अन्धकारिरिति ख्यातस्स एव पशुपश्शिवः १४
तस्मादियं मयाख्यातलीला विश्वाधिकस्य वः
श्रुता भवद्भिः पुण्यानां मुनयः परमेश्वरः १५
यच्छ्रुत्वा स्वर्गमत्यादि लोकेषु सुखमेधते १६
इति श्रीवरुणोपपुराणे एकादशोऽध्यायः

द्वादशोऽध्यायः
वरुणः
अतः परं प्रवक्ष्यामि लीलानटनमीशितुः
प्रदोषे रत्नशिखरे कैलासे परमेश्वरीम् १

निवेश्य रत्नपीठे तां मायां हैमवतीं शिवाम्
नृत्यत्कुञ्चितपादेन डमरुं वह्निमेव च २
लम्बिना वापि हस्तेन साभयेन तथा पुनः
मृदङ्गिकोऽभवद्विष्णुर्धाता ताळकरोऽभवत् ३
लक्ष्मीश्च वेणुवीणादिवादिनी च सरस्वती
एवं नटति देवोऽसौ लोकनृत्तविधायकः ४
तस्यैवं नटतश्शम्भोर्दृष्ट्वा तं पारमेश्वरम्
यक्षास्सिद्धास्तथा नागास्तथा किम्पुरुषादयः ५
पुनश्च मुनयश्च सर्वे तथा चाप्सरसां गणाः
स्तुवन्ति च महादेवं प्रसन्नेन्द्रियमानसाः ६

देवाः

जय जय सर्वोत्तमाराध्य चरणशरण्य शरणागत
पालक त्रयम्बक गङ्गाधर चन्द्रशकलालङ्कारमौलौ
विश्वाधिक पुरहर स्मरहर त्रिलोकगुरो विश्वनाथ
गौरीवर ज्वरहरकल्पभूरुह परिवृताद्यानवादी
विहारमन्दरगिरिवरसञ्चरण कैलासपते धूर्जटे नीललोहित
सोम शङ्कर सर्वलोकपते पाहि मां पाहि मां रक्ष रक्ष प्रसीद
प्रसीद प्रभो विश्वबन्धो नमस्ते नमस्ते ७
इति स्तुवन्ति मुनयस्सिद्धविद्याधरोरगाः
नृत्त्यं तदद्भुतं शम्भोर्दृष्ट्वा तेऽपि कृतार्थताम् ८
प्रापुः प्रसन्नमनसः परं विज्ञानमाप्य च
प्रययुक्ते तु स्वस्थानं देवविद्याधरोरगाः ९
प्रसन्नं च महादेवं विश्वाधिकमुमासखम्
एतदेव पुरावृत्तं पुराणं परमेश्वरम् १०
पुरा च शौनकः प्राह मुनीनां भावितात्मनाम्
पुरावृत्तमिदं पुण्यमाज्यानं श्रुतिसम्मितम् ११

उक्त्वा श्रुत्वा च मेधावी ब्रह्मभूयाय कल्पते
वरुण उवाच
मुनीनां भवतामेतत्कथितं पुण्यमुत्तमम् १२
वारुणं नाम वेदार्थसंग्रहं पारमेश्वरम्
पुराणं सर्वमेतद्धि कथाज्यानं महेशितुः १३
प्रापयंश्च पठन्मर्त्यो गोमेधफलमश्नुयात्
इदं वो भद्रमाख्यातं सर्वेषां भद्रमस्तु वः १४
शिवः पुण्यः शिवा पुण्यपुण्यं भस्म त्रिपुण्ड्रकम्
पुण्यश्चैवाविमुक्तश्च शिवोऽस्माकं भवेत्सदा १५
भवतामपि भोगादिमोक्षान्तं चाददाद्धरः
इति प्राचेतसं वाक्यं मुनयस्तत्वदर्शिनः १६
श्लाघयन्तो ययुर्देवं वरुणं स्वपुरं तदा
इदं यः शृणुयान्नित्यं सर्वविज्ञानविद्भवेत् १७
इति वारुणोपपुराणे द्वादशोऽध्यायः

"Vāruṇopapurāna" in Sastri, M. Seshagiri, et.al., *A Descriptive Catalogue of the Sanskrit Manuscripts of the Government Oriental Manuscripts Library, Madras,* Madras 1901-1951, No. 15663, pp.10330-10331.